वायुः संवर्तुलो यस्मात् सर्वांगालिंगने क्षमः॥ 14 : 44 ॥॥

बिंदुरन्यो महावायो धूम्राभो धूलिधूसरः।
स्वबीजाद्या यतः सर्वा युक्ता सा वायुवीर्यगा॥ 14 : 45॥

(18) विक्षिपे+त्+ विद्विषः सैन्यं चालयेद्भूतराक्षसान्।
कूश्मांडं सपिशाचादि पादपान् पर्वतानपि॥ 14 : 46॥

आकाशधारणा धार्य्या शून्या सा शून्यलांछना।
स्वबीजविमलाधारा धारणा पंचमी मता॥ 14 : 47॥

शून्या या शून्यवस्तुत्वात्तेनैवांकितरूपगाः।
स्वबीजमंत्रशक्तिर्वा शून्यकर्मकृतोद्यमा॥ 14 : 48॥

विषस्यापह्न(f. 34$^v$) ात कु य्या च्छ्र न्य वा निखिलं जगत्।
उद्घातशतयोगेन भवेत्तद्धारणाजयः॥ 14 : 49॥

जानुमात्र ⊔ [-2-] न्मात्रा तालस्तद्वादशाहतः।
शततालस्ततोद्घात+ः+ समयस्तर्जयेत् स्थितः॥ 14 : 50॥

धारणानां जयं कृत्वा तद्वीर्य्यफलसाधकः।
योगी संयोजयेद्योगं प्रधाने देहपंजरे॥ 14 : 51॥

निरालंबो न यो गा ाप भ व त्त त्फ ल सा ध(2)कः।
आलंबनं वपुस्तस्य सिराजालावतानितं॥ 14 : 52॥

काश्चित्तत्र सिरा स्थूलाः काश्चित् सूक्ष्मातिसूक्ष्मगाः।
नाड्यस्ता गदितास्तत्र शरीरे नीलसंचराः॥ 14 : 53॥

नांतिकस्थो निलस्तत्र संधुक्षत्युदरानलं।
अत्तारं बाधते तेन तत् समानसमीकृतं॥ 14 : 54॥

रसात्मकेन भावेन नाडीरंध्रेषु सर्पितं।
शुक्रमज्जास्थिसंघस्य र(3)क्तमांसकफस्य च॥ 14 : 55॥

विवृद्धिं कुरुते यस्य नाडीनां च निरंतरं।

---

**49ab.** ात कु य्या च्छ्र न्य वा tops missing
**51cd.** °जयेद्योगं प्रधाने देहपंजरे। नि ] This was legible when first collated, but the tops of the letters are now broken off in M$^Y$.
**52ab.** ाप भ व त्त त्फ ल सा ध tops missing in M$^Y$

---

**46 a.** विक्षिपेत् ] M$^{Yc}$; विक्षिपे M$^{Yac}$B **49 ab.** °पह्न ात कु य्या च्छ्र न्य वा ] M$^Y$; °पवृतिं कुर्याच्छून्यं वा B **50 a.** न्मात्रा ] M$^Y$; मात्रा B **52 ab.** गा ाप भ व त्त त्फ ल सा ध M$^Y$ (tops missing); गोपि भवेत्तत्फलसाध° B **53 a.** सिरा ] M$^Y$; स्थिरा B **54 c.** बाधते ] M$^Y$; बाधृते B

नाडयोपि च नाभिस्थास्तदधःकंदमाश्रिताः॥ 14:56॥

तत्रस्थास्तिर्य्यगूर्ध्वाधः सर्वतः प्रतिसर्पिताः।
तासां मध्ये प्रधानाष्टौ तद्धृत्पद्मदलाग्रगाः॥ 14:57॥

ऐंद्री चाग्निमता याम्या नैर्ऋत्याव्या मरुद्गता।
कौबेरी शांकरी नाडी स्थिता - देवताश्रयाः॥ 14:58॥

तासु (4) संचरते क्षेत्री कर्णिकास्थो दले दले।
यादृग्दिग्देवताभावस्तादृग्तादृग्भवेत्ततः॥ 14:59॥

तद्दलांतरचारेण शून्यभावः स्थितः पशुः।
वेत्ति शून्यमिवात्मानं शून्योपाधिविशेषतः॥ 14:60॥

एवं हृत्पद्ममध्यस्थो जीवश्चरति सर्वतः।
यतस्तत्र स्थितः सर्वमालोचयति पुद्गलः।
संनिधानस्थितस्तस्मिन् विभुर्यस्माद्वि(5)शेषतः॥ 14:61॥

प्रतोद उवाच।
तस्य चारो गतिः प्रोक्ता तद्धात्वर्थप्रकाशिता।
न च सा तस्य येनायमात्मा प्रोक्तः पुरा विभुः॥ 14:62॥

प्रकाश उवाच।
चरशब्दे गतौ किं तु क्वचित् ज्ञाने प्रवर्तिते।
गत्यर्थास्तत्र ये सर्वे ज्ञानार्थास्ते प्रचोदिताः॥ 14:63॥

विभुत्वान्न गतिस्तस्य ज्ञानव्यक्तिर्दले दले।
नानाकारविशेषार्हा ज्ञातुरर्थनि(6)वेदिका॥ 14:64॥

प्रतोद उवाच।
पूर्वमात्मा विभुः प्रोक्तो ज्ञानरूपो न नश्वरः।
नित्यं ज्ञानं स्थितं तस्य नानाकारः कथं भवेत्॥ 14:65॥

प्रकाश उवाच।
नित्यज्ञानस्य यो भेदः स चोपाधिवशात्ततः।
उपाधिवशतो ज्ञेयं नानाकारं बहिर्मुखं॥ 14:66॥

अक्षभेदेन तद्भिंनं स्फटिकोपाधिभेदवत्।
तद्वत्ता नाडयो भिंना देवताभावभे(7)दतः॥ 14:67॥

---

**56 d.** °कंद° ] $M^{Y}B^{ac}$; °कन्ध° $B^{c}$ **58 d.** स्थिता - ] $M^{Y}$; स्थिता ⊔ B **59 a.** तासु ] $M^{Y}B^{ac}$; ⏑⏑ $B^{c}$ **59 b.** दले दले ] $M^{Y}$; दळे दळे B **60 a.** तद्दलांत° ] $M^{Y}$; तद्दळान्त° B **61 d.** विभुर्यस्मा° ] *conj.*; विभुर्यस्या° $M^{Y}$B **62 a.** चारो ] $M^{Yc}$B; चोरो $M^{Yac}$ **63 d.** ज्ञानार्थास्ते ] ज्ञाना × स्त× र्थास्ते $M^{Y}$ **64 b.** °र्दले दले ] $M^{Yc}$; °र्दलेर्दले $M^{Yac}$; °र्दळे दळे B

ज्ञानं भिंनमिवाभाति न च भिंनस्थिरत्वतः।
उपलब्धिर्य्यतः कार्या नाडीसंचारगोचरा॥ 14:68॥

वायुः स प्राणजीवाख्यस्तच्चारादुपचारतः।
गतिरुक्ता यतस्तेन विना प्रख्याप्यते मृतः॥ 14:69॥

तदाधारा च चिद्यक्तिर्य्यत्र गच्छसि तत्र सा।
हृत्पद्मस्योर्ध्वतो नाड्यौ ⊔ ख्येतद्वा(8)रदक्षिणे॥ 14:70॥

वामगा चंद्रगा सौम्या दीप्ता दक्षिणगार्कगा।
सोमार्काकल्पिता मध्या सर्वनाडीपुरःसरा॥ 14:71॥

स याति मध्यचारेण दक्षिणेनापरेण च।
हृ ⊔ कंठं ततस्तालुं भूमध्यं नासिकांतरं॥ 14:72॥

तस्मान्मासांगुलं यावद्गत्वा स्थानान्निवर्तते।
हृदि ब्रह्मा गळे विष्णुस्तालुके (9) रुद्रनामकः॥ 14:73॥

ईश्वरश्च भृवोर्मध्ये नासाग्रे च सदाशिवः।
देवताभेदतः प्रोक्तः स्थानभेदो लयार्थतः॥ 14:74॥

स्वस्वाध्वव्यापका देवास्तद्व्याप्तिविषयांतगाः।
प्रजापर्य्यंतगो ब्रह्मा विष्णु रागावसानगः॥ 14:75॥

रुद्रः कालावधिः ख्यातो महेशो निजधामनि।
सदाशिवः स्वशक्ति(10)स्थः पंचमंत्रनिकेतनः॥ 14:76॥

उत्तरोत्तरसंचारादुत्तरोत्तरभूमयः।
भवंति तद्विशेषस्थास्तद्विशेषगुणैः सह॥ 14:77॥

एको वा नामगैर्भेदैः स्थितः स परमेश्वरः।
बृहत्वाद्बृंहकत्वाच्च ब्रह्मा वा ब्रह्मयोगतः।
विष्णुः प्रभवशीलत्वात् प्रभवो जगतः प्रभुः॥ 14:78॥

रुजं द्रावयते यस्मा(11)त्तेन रुद्रो रुजः क्षयात्।
सर्वैश्वर्य्यगुणः शेषादीश्वरः स महेश्वरः॥ 14:79॥

सदाशिवः सदाकांतः शांतौ वा संस्थितः शिवः।
संज्ञाभेदै स्थितश्चैवमेक एव जगत्प्रभुः॥ 14:80॥

स एव च फलं दद्यात्तच्च लक्ष्यसमाश्रितं।
लक्ष्यं प्राणस्थितं जीवं वायुगं सकलात्मनः॥ 14:81॥

किलात्मा स (12) ⊔ [-2-] जोंगो बिंदुकारपुटीकृतं।

---

**72 d.** भूमध्यं ] M$^{Y}$ ; भ्रूमध्यं B$^{c}$ ; भृमध्यं B$^{ac}$ **74 a.** भृवोर्मध्ये ] M$^{Y}$B$^{ac}$ ; भ्रुवोर्मध्ये B$^{c}$ **82 b.** जोंगो ] M$^{Y}$ ; चांगो B

संस्थितः सर्वदेहेषु हंसो हंस इति बृवन्॥ 14:82॥

तल्लक्ष्यगतचिंतात्मा तत्संचारगुणानिलः।
स्थानात् स्थानांतरोत्कर्षादुत्कृष्टं फलमाप्नुयात्॥ 14:83॥

तर्केणालोच्य तत् सर्वं विनाशगुणसंयुतं।
मुत्क्वा सांशं पुरो मार्गं निरंशं तत्वमा(13)श्रयेत्॥ 14:84॥

निरालंबं यदा तत् स्यात् समाधिः स परस्तदा।
समाधौ वेत्ति नो वेन्यं सर्वं शब्दादिगोचरं।
तन्निष्पत्तौ यथाभीष्टं फलं प्राप्नोति योगवित्॥ 14:85॥

प्रतोद उवाच।
तत् स्वरूपनिरालंबमर्थाकारबहिष्कृतं।
कथमेवं शिवं तत्वमाश्रयेद्योगचिंतकः॥ 14:86॥

प्रकाश उवा(14)च।
तत् स्वरूपममूर्तं चेत् कथं तत् ज्ञायते पुनः।
सुखदुःखादिकं तद्वत् ज्ञानं किं न विभाव्यते॥ 14:87॥

तत् ज्ञानं कार्य्यतो गम्यं तत् स्वरूपावधारणात्।
अथ स्वरूपविज्ञानमुत्पंनं येन लक्ष्यते॥ 14:88॥

आनंदं ब्रह्मणो रूपमवबोधस्तदर्थगः।
विनालंबं तदा ज्ञेयं जनकं न भवेद्यतः॥ 14:89॥

येन तज्जन्यतो सोर्थो ज्ञे(15)यो ज्ञानानुसंधितः।
हेयमानंदगं रूपं पाश ⊔ क्तं सुनिर्मलं॥ 14:90॥

⊔ [-2-] द्गुणा भवंत्यष्टावणिमाद्याः क्रमात् स्थिताः।
अणिमा लघिमा महिमा प्राप्तिः प्राकाम्यमीशिता॥ 14:91॥

वशिता यत्रकामं च वसिता पदयोगिता।
अणिमाणुत्वसंबंधाल्लघिमा लघुभावतः॥ 14:92॥

महिमा महतो मानात् प्राप्तिः स्यादखि(16)लाप्तितः।
प्राकाम्यं काम्यसंप्राप्तिरीशत्वं चेशभावतः॥ 14:93॥

वशित्वं वशिता सर्वा यत्र काया यथेच्छया।
एवमीशगुणैश्वर्य्यं निजधर्मं समुज्वलं।

---

**82 d.** बृवन् ] $M^Y$; ब्रुवन् B **85 c.** वेत्ति ] वे × ति× त्ति $M^Y$ **90 a.** तज्जन्यतो ] $M^Y$; तज्जन्यते B **90 c.** हेय° ] $M^Y$; ज्ञेय° B **92 b.** वसिता ] $M^Y$; वशिता B **93 a.** मानात् ] $M^Y B^{ac}$; भानात् $B^c$ **93 b.** स्याद° ] $M^Y B^c$; स्याद्य° $B^{ac}$ **94 b.** स-मुज्वलं ] $M^Y B^{ac}$; समुज्ज्वलं $B^c$

भवेत्तत्क्रमशो व्यक्तं योगिनो योगसेवनात्॥ 14:94॥

प्रतोद उवाच।
योगः संबंध इत्यु(17)क्तः स केनास्येह चोदितः।
आत्मनः सह तत्वेन संयोगो न विभुत्वतः॥ 14:95॥

प्रकाश उवाच।
अणिमादिगुणैर्योगो योगो वा शक्तियोगतः।
समाधियोगतो योगो योगाभ्यासगतोथवा॥ 14:96॥

योगो वा तत् समावेशस्तत् स्वरूपविभावनात्।
विभुत्वान्न पतेर्योगः प्रोक्तस्तदुपचारतः॥ 14:97॥

योगरुद्धिस्तद(18)भ्यासादष्टधर्मपरिच्छदा।
तदुक्तोपायतः सिद्धा योगिनो योगतो पराः॥ 14:98॥

दर्शयंति च तच्छक्तिं क्वचित् कस्यचिदग्रतः।
तत् प्रष्ठामनुमंतव्या देशकालनरांतरे॥ 14:99॥

प्रसिद्धिमात्रमेवेदं कस्माच्चेत्तन्न दृश्यते।
आत्मना यंन दृष्टं स्यात्तत्किं नास्ति महीतले॥ 14:100॥

प्रकाराणां विचित्राणामा(f. 35r) ---
--- दृष्टा श्रोता वा तद्विनिश्चयः॥ 14:101॥

अभावो न च चित्राणां शक्यो दर्शयितुं क्षितौ।
विज्ञानोत्तरसामर्थ्याद्योगिनां चित्प्रतीयते॥ 14:102॥

आगमेनापि योगित्व म प र्य त गु णा म त।
स या गा त द्गु णः क्रा डा कु या त्प्र त्य य ह तु तः॥ 14:103॥

प्र त्य य न भ व ⏓ ⏓ ⏓ न्य षा मु ाक्त – ˘ (2) णा।

---

**102a.** अभावो न च चित्राणां ] This was legible when first transcribed, but the tops of the letters are now broken off in M$^{Y}$.
**103b.** °म प र्य त गु णा म त ] tops missing
**103cd.** स या गा त द्गु णः क्रा डा कु या त्प्र त्य य ह तु तः ] tops missing
**104ab.** प्र त्य य न भ व ⏓ ⏓ ⏓ न्य षा मु ाक्त ⏓ ⏓ णा ] tops missing

---

**99 c.** प्रष्ठा° ] M$^{Y}$B$^{ac}$; प्रष्टा° B$^{c}$ **100 b.** कस्माच्चे° ] M$^{Y}$; कस्माचे° B **100 d.** महीतले ] M$^{Y}$; महीतळे B **101 ab.** विचित्राणामा --- ] M$^{Y}$; विचित्राणामालयं भूमिमण्डलं B **101 c.** --- दृष्टा ] M$^{Y}$; न कश्चित्सर्वतो दृष्टा B **103 ab.** °म प र्य त गु णा म त ] M$^{Y}$; °मपर्यन्तगुणैर्मितं B **103 cd.** स या गा त द्गु णः क्रा डा कु या त्प्र त्य य ह तु तः ] M$^{Y}$; स योगी तद्गुणैः क्रीडा कुर्यात्प्रत्ययहेतुतं B **104 ab.** प्र त्य य न भ व ⏓ ⏓ ⏓ न्य षा मु ाक्त – ˘ णा ] M$^{Y}$; प्रत्ययेन भवेद्दी ⊔ न्येषामुक्तिकांक्षिणां B

प्रत्ययो भवेत्तस्य योगयुक्तस्य योगिनः ॥ 14:104 ॥

उत्क्रांतियोगतः सोपि प्रकुर्याद्गतशक्तितः ।
हुंफड्कारांतसंयोगादुच्चारात् सद्यपूर्वकात् ॥ 14:105 ॥

यावदष्टसहस्रं तु तावदुत्क्रमते ध्रुवं ।
करणात् स्फोटयेत् स्फारं निरद्धस्फुरणे दधिः ॥ 14:106 ॥

उत्क्रांतौ ब्रह्मसायुज्यं प्रयाति विधिवेदवित् ।
एव ⏑ (3)गविधानज्ञो योगमाप्नोति शाश्वतं ॥ 14:107 ॥

बुद्धिप्रसिद्धगुणभक्तविशेषधर्मसंप्राप्तसौख्यविभवप्रभवप्रगल्भः ।
योगेश्वरः सकलयोगविधानमुख्यः प्रोक्तो मयाद्य नियतं फलसाधनं यत् ॥ 14:108 ॥

॥ = ॥ ⊗ ॥ = ॥ इति श्रीपराख्ये महातंत्रे मुक्तिपदार्थयोगपदार्थपटलश्चतुर्दशमः ॥ ॥ ⊗

## TRANSCRIPTION OF PAṬALA 15

(4) प्रकाश उवाच ।
साधने साधनोद्देशः सम्यक् साधननिश्चयः ।
प्रतिपादिप्रसिद्धोक्तमुक्तिसाम्यापरिग्रहः ॥ 15:1 ॥

प्रोक्तः साधनसंघातो दीक्षामूलपुरःसरः ।
विज्ञानाख्यः क्रियाख्यस्तु चर्याख्यो योगसंज्ञितः ॥ 15:2 ॥

प्रतोद उवाच ।
एकैकस्य प्रधानत्वं साधनस्योपदर्शितं ।
बोधादीनामुपायानां (5) कतमो मुक्तिसाधनं ॥ 15:3 ॥

प्रकाश उवाच ।
दीक्षा तावदियं मुख्या येन (B, f. 7ʳ)तन्मूलचोदिता ।
चतुर्णामंगता प्रोक्ता तस्यामेवोपयोगतः ॥ 15:4 ॥

ज्ञानं तावत्पदार्थानां तत् स्वरूपविभावतः ।
यावन्न तद्गतो भावस्तावन्न स्यात् क्रियाक्रमः ॥ 15:5 ॥

---

**106 d.** निरद्ध° ] $M^Y$; निरुद्ध° B **107 c.** एव ⏑ ग° ] $M^Y$; एवं योग° B **108 b.** °प्रगल्भः ] $M^YB^c$; °प्रगलः $B^{ac}$ **108 d.** °साधनं ] $M^YB^c$; °कोधनं $B^{ac}$ • Colophon in B: ॥ श्री ॥ — ॥ इति श्रीपराख्ये महातन्त्रे मुक्तिपदार्थयोग ॥ पदार्थपटल-श्चतुर्दशमः ॥ श्री ॥ श्री ॥ B **1** Before the chapter begins, B has ॥ श्रीरामचन्द्राय नमः ॥ श्री ॥ - श्रीः ॥ **1 c.** प्रतिपादिप्र° ] $M^YB^c$; प्रतिपादिप्रप्र° $B^c$ **2 c.** विज्ञानाख्यः ] $M^{Yc}B$; वि× श× ज्ञानाख्यः $M^Y$

## षष्ठः पटलः

### ( सुषुम्नान्तर्गत्–सूर्येन्दोग्रहण वर्णनं, तत्र जपफलञ्च )

श्री देव्युवाच—

देवदेव महादेव कथय स्वानुकम्पया।
यदि नो कथ्यते देव विमुञ्चामि तदा तनूम् ॥१॥
सर्वतत्त्वमयस्त्वं हि सर्वयोगमयः सदा।
सुषुम्नान्तर्गतं देव यद्दृष्टं परमेश्वर ॥२॥
एतद् रहस्यं परमं सर्वयोगोत्तमोत्तमम् ॥३॥

श्री ईश्वर उवाच—

अधुना सम्प्रवक्ष्यामि सुषुम्नामध्यसंस्थितम्।
सूर्यपर्वं महेशानि चन्द्रपर्वं तथैव च ॥४॥

( सुषुम्नान्तर्गत चन्द्र एवं सूर्य ग्रहणवर्णन-ग्रहणकाल में जपफल )

देवी कहती हैं—हे देवदेव ! परमेश्वर ! सुषुम्नान्तर्गत् जिस रहस्यात्मक तत्व को आपने देखा है, उस सर्व योगोत्तमोत्तम तत्व का कृपापूर्वक उपदेश करिये। हे देव ! यदि आपने दया करके मुझसे इस रहस्य को नहीं कहा, उस स्थिति में मैं अपना शरीर त्याग कर दूँगी।

श्री शंकर कहते हैं–अभी मैं सुषुम्नामध्यस्थित चन्द्रपर्व तथा सूर्यपर्व का वर्णन करता हूँ। सुषुम्नामध्य में स्थित सूर्य पर्व ( ग्रंथि ) सन्धि के अन्तर्गत् सर्वश्रेष्ठ पर्व है। सूर्य पर्व में ब्रह्मादि देवता समूह जपयज्ञ करते रहते हैं ॥ १–४ ॥

सुषुम्नावर्त्मं मध्यस्थं सूर्यपर्व परात् परम्।
यत्र ब्रह्मादयो देवा जपयज्ञेषु तत्पराः ॥५॥

किं पुनर्मानवा नैव वराकाः क्षुद्रबुद्धयः ।
पुष्करद्वीपमासाद्य ये चान्ये मानवाः प्रिये ॥६॥

सुषुम्ना मध्य में जो सूर्यपर्व है वहाँ ब्रह्मादि देवता जपयज्ञ में निरत रहते हैं । अतः क्षुद्रबुद्धि दीन मानवों की बात को क्या कहा जाये ? अर्थात् मानवगण को भी सर्वप्रयत्न द्वारा सूर्यपर्व के जपयज्ञ में सतत् उद्यत रहना चाहिये । हे प्रिये ! जो लोग पुष्कर द्वीप का आश्रय लेकर जप करते हैं, उन्हें किंचित् सिद्धि प्राप्त होती है ॥ ५-६ ॥

तेषाञ्च परमेशानि किंचित् सिद्धिः प्रजायते ।
सूर्यपर्व वरारोहे बहुभाग्येन लभ्यते ॥७॥

तथैव चन्द्रपर्वाख्यं जपयज्ञं सुदुर्लभम् ।
नातः परतरः कालः कश्चिदपि वरानने ॥८॥

उन्हें सामान्य सिद्धि प्राप्त होती है, किन्तु जो सूर्य पर्व का आश्रय लेकर जप यज्ञ करते हैं, हे वरारोहे ! ऐसे लोग परम भाग्यवान हैं । जिन्हें सूर्य ग्रंथि प्राप्त है, अथवा चन्द्र ग्रंथि का सन्धान है, वे भाग्यशाली हैं । इनमें जो जप किया जाता है, जब तक जिस काल पर्यन्त किया जाता है, वह श्रेष्ठकाल है ॥७-८॥

सहस्त्रारे महापद्मे चन्द्रस्तिष्ठति सर्वदा ।
मूलाधारे महेशानि स्वयं सूर्यः प्रकाशते ॥९॥

स्वाधिष्ठाने तु देवेशि वन्हि स्तिष्ठति सर्वदा ।
चन्द्रसूर्यग्रहं देवि यदा भवति बाह्यतः ॥१०॥

तदैव सहसा देवि सहस्त्रारे मनो न्यसेत् ।
सूर्यपर्वणि महेशानि मूलाधारे मनो दधे ॥११॥

बाह्यपर्व महेशानि दृष्ट्वा पुनश्च देशिकः ।
मनो निवेश्य चार्वङ्गी चन्द्रे च ब्रह्मपंकजे ॥१२॥

सूर्ये वा चञ्चलापाङ्गी मूलाधारे मनो न्यसेत् ।
अन्तःपर्वणि देवेशि निविश्य चित्तसारथीम् ॥१३॥

जपं परमयत्नेन नतु वाह्यं निरीक्षयेत् ।
सूर्यादिपर्वं देवेशि पुनः पुनरुदीक्षते ॥१४॥

हे देवेशी ! चन्द्र सदा सहस्त्रार महापद्म में अवस्थान करता है और मूलाधार में सूर्य प्रकाशित रहता है । स्वाधिष्ठान में वन्हि की स्थिति है । हे देवी ! जब वाह्य चन्द्र तथा सूर्य ग्रहण होता है, तब सहस्त्रार में मन को निवद्ध करे । हे महेशानी ! तदनन्तर मन को मूलाधारस्थ सूर्य ग्रंथि में संयुक्त करे । सर्व प्रथम वाह्यग्रहण देखे । तत्पश्चात् सहस्त्रार महापद्म में चन्द्रग्रंथि में मनोनिवेश करे । अथवा मूलाधारस्थ सूर्य के साथ मनः संयोग करे । चित्त सारथी को देहाभ्यं-न्तरस्थ चन्द्र एवं सूर्य पर्व के साथ संयुक्त करके एकाग्रता के साथ जप करना चाहिये । अब वाह्यग्रहण का दर्शन न करे । हे चञ्चलापाङ्गी ! हे देवेशी ! वाह्य ग्रहण का पुनः-पुनः दर्शन करने से यह जप निष्फल हो जाता है ॥९–१४ ॥

सुषुम्ना च नदी यत्र साक्षाद्ब्रह्मस्वरूपिणी ॥१५॥

गंगादिसर्वतीर्थानि प्रयागवदरी तथा ।
हरिद्वारश्च चार्वङ्गी गया काशी सरस्वती ॥१६॥

सिन्धु-भैरव-शोणाश्च ब्रह्मपुत्रश्च सुन्दरी ।
अयोध्या मथुरा माया काशी कांञ्ची अवन्तिका ॥१७॥

द्वारावती च तीर्थेशी धृत्वा प्रकृतिमूर्तितः ।
गयादि सर्व तीर्थानि तत्र तिष्ठन्ति सन्ततम् ॥१८॥

ब्रह्मरूपा सुषुम्ना ही नदी है । हे चार्वङ्गी ! हे सुन्दरी ! गंगा, सिन्धु भैरव, शोण, ब्रह्मपुत्र, सरस्वती प्रभृति पुण्यतोया नदी तथा प्रयाग, बदरिकाश्रम, हरि-द्वार, गया, काशी, अयोध्या, मथुरा, काञ्ची, माया, अवन्तिका, द्वारावती प्रभृति श्रेष्ट तीर्थ समूह सुषुम्ना में सदा विद्यमान हैं ॥ १५–१८ ॥

चन्द्रसूर्यग्रहे देवी मनोह्यान्तर्दधे शिवे ।
यः पश्येच्चञ्चलापांङ्गी सहस्त्रारे निशाकरम् ॥१९॥

मूलाधारे महेशानी यः पश्येत् सूर्यपर्वणि ।
राहुग्रहसमायुक्तमन्तरात्मनि पार्वती ॥२०॥

दृष्ट्वा सूर्यमिदं भद्रे स्थापयेद् हृदये प्रिये ।
यत्र नीत्वा महामाया सुषुम्नाहृदयरुपिणी ॥२१॥

यस्या वामे इड़ा नाड़ी दक्षिणे पिंगलापरा ।
हृदि स्नात्वा तत्र वीरः शिवशक्तिमयो भवेत् ॥२२॥

हे चंचल अंगोवाली ! हे देवी, हे शिवे, हे महेशानी ! चन्द्र तथा सूर्य ग्रहण में जो वीर साधक देहमध्य में मनः संयोग द्वारा सहस्त्रार में चन्द्रदर्शन करते हैं, अथवा मूलाधार की सूर्य ग्रंथि में सूर्य को अन्तरात्मा में राहुग्रस्त देखते हैं, तदनन्तर उस राहुग्रस्त सूर्य को अपने हृदय में स्थापित करते हैं ( अर्थात् महामाया को हृदयरूपी सुषुम्ना में स्थापित करते हैं ) और वामभागस्थ इड़ा तथा दक्षिण भागस्थ पिंगला के मध्य अवस्थित हृदयरूपिणी सुषुम्नानाड़ी में अवगाहन करते हैं, वे साधक शिवशक्तिमय हो जाते हैं ॥ १९-२२ ॥

शिवशक्तिमयी साक्षात् सा संध्या वरवर्णिनी ।
संध्यास्नानमये तत्ते कथितं योगिदुर्लभम् ॥२३॥

सुषुम्नावर्त्म मध्यस्थं यद्दृष्टं वरवर्णिनी ।
दृष्ट्वा चन्द्रग्रहं भद्रे सूर्यं वा जपमाचरेत् ॥२४॥

तावत्कालं जपेन्मंत्रं यावन्मोक्षं वरानने ।
एतत्तत्वं महेशानी ब्रह्मा जानाति माधवः ॥२५॥

इन्द्राद्या देवताः सर्वाः बहुभाग्येन लभ्यते ।
ज्ञात्वा तत्वमिदं देवी देवा नागादयोऽपरे ॥२६॥

प्रजप्य चेष्टविद्याञ्च शीघ्रं सिद्धिमुपालभेत् ।
पुष्करादिनिवासास्तु ये लोकाः सुरवन्दिते ॥२७॥

ते ते सर्वे महेशानी किंचित् फलमवाप्नुयुः ।
भारते बहुकालेन सिध्यते नगनन्दिनी ॥२८॥

हे वरवर्णिनी ! जो शिवशक्तिमयी हैं, वे ही साक्षात् सन्ध्यारूपिणी हैं। शिव तथा शक्ति संगम में स्नान करना ही योगीजन दुर्लभ संन्ध्या स्नान है। हे वरवर्णिनी ! सुषुम्नावर्त्म में जो दृग्गोचर होता है, वह तुमको कहा। हे भद्रे ! हे वरानने ! चन्द्र अथवा सूर्यग्रहण का दर्शन करके, ग्रहण मोक्ष पर्यन्त जप करे। हे महेशानी ! केवल ब्रह्मा तथा विष्णु ही यह तत्व जानते हैं।

इन्द्रादि देवगण ने भी भाग्यबल से इसे जाना है। हे देवी ! देवता, नागगण अथवा अन्य कोई भी इस तथ्य से अवगत होकर, मंत्रजाप द्वारा त्वरित सिद्धि प्राप्त कर सकते हैं। हे सुरवन्दिते ! हे महेशानी ! जो पुष्करादि लोक में निवास करते हैं, उन्हें सामान्य फल ही प्राप्त होता है, विशेष फल नहीं मिल सकता। हे पर्वतनन्दिनी ! जो इस रहस्य को नहीं जानता, उसे भारतवर्ष में भी दीर्घकाल में मंत्रसिद्ध होता है ॥२३-२८॥

नायं दोषयुतः कालः कलिरेव तु मूर्तिमान्।
ग्रहणे चन्द्रसूर्यस्य देवा नागादयोऽपरे ॥२९॥
ब्रह्मा विष्णुश्च रुद्रश्च ये चान्ये सुरसत्तमाः।
चन्द्रसूर्यपद गत्वा प्रजपन्तीष्टसिद्धये ॥३०॥

मूर्तिमान कलि यद्यपि प्रकट है, तथापि सूर्य चन्द्र ग्रहण में जितना समय लगता है, वह किसी भी प्रकार से दोषयुक्त काल नहीं होता। इस समय में देव, नाग, ब्रह्मा, विष्णु, रूद्र तथा अन्यान्य श्रेष्ठ देवगण भी अपनी अभीष्ट सिद्धि के लिये चन्द्र तथा सूर्य ग्रन्थि में जाकर जप करते रहते हैं ॥२९-३०॥

चन्द्रसूर्यग्रहे देवी यत्तेजस्तुपजायते।
तत् सर्वं चञ्चलापाङ्गी ब्रह्माद्यास्त्रिदिवौकसः ॥३१॥

हरन्ति चञ्चलापाङ्गी मानुषास्त्वधमा कुतः।
कलिकालस्य लोकेषु भारते वरवर्णिनी ॥३२॥
नाना दोषाः प्रजायन्ते अतो नैव च सिध्यति।
चन्द्रसूर्यग्रहे देवी लोका भारतवासिनः ॥३३॥

हे देवी ! हे चञ्चल अंगोवाली ! चन्द्र सूर्य ग्रहण काल में जो तेज उत्पन्न होता है, ब्रह्मादि देवता भी उस तेज को धारण करने की इच्छा रखते हैं। अतः इस सम्बन्ध में अधम मानव की क्या तुलना ? हे वरवर्णिनी ! कलिकाल में भारत-वासी नाना दोषों से कलुषित हो चले हैं। अतः उन्हें मंत्र सिद्धि नहीं होती। चन्द्र तथा सूर्य ग्रहण काल में यहाँ के लोग भक्ति पूर्वक जाप करके निश्चय ही सिद्धि प्राप्त कर लेते हैं। यह कभी भी अन्यथा नहीं होता। चन्द्र ग्रहण में स्नान, दान, श्राद्धादि करने से द्विगुणित फल प्राप्त होता है ॥३१-३३॥

तत्काले प्रजपेद् भक्त्या नान्यथा च कदाचन ।
स्नानं दानं तथा श्राद्धमिन्दोः कोटिगुणं भवेत् ॥३४॥

सूर्ये दशगुणं देवी नान्यथा मम भाषितम् ।
जपेत्तर्हि फलं यद्वत्, नान्यथा तद्भवेत् क्वचित् ॥३५॥

अतिगोप्यं महत् पुण्यं सारात् सारं परात् परम् ।
न कस्मैचित् प्रवक्तव्य यदि कल्याणमिच्छसि ॥३६॥

इति महामायातंन्त्रे षष्ठः पटलः

हे देवि ! सूर्य ग्रहण में स्नान-दान श्राद्ध करने से दशकोटि गुणित फल प्राप्त होता है। यह मेरा वाक्य है। कदापि निष्फल नहीं होगा। जप के द्वारा जो फल लाभ होता है, अन्य किसी भी उपाय से वैसा फल नहीं मिलता। सुषुम्ना मध्य स्थित, अतिशय गोपनीय, पुण्यप्रद, सर्ववस्तु का सार तथा श्रेष्ठतम तत्व यही है। यदि तुम अपने कल्याण की कामना करो, उस स्थिति में इसका तत्व किसी भी प्रकाशित नहीं करना ॥३४-३६॥

महामायातंत्र, षष्ठ पटल समाप्त

## सप्तमः पटलः

( सुषुम्नावर्त्ममध्यस्थ मन्त्रः, ग्रहणकाले मोक्षे च जपमन्त्रः तदा जपफलञ्च )

श्री ईश्वर उवाच—

अतः परंप्रवक्ष्यामि अतिगुह्यं परात् परम् ।
सुषुम्नावर्त्ममध्यस्थं यन्मत्रं तत् शृणु प्रिये ॥१॥

एतन्मत्रमविज्ञाय यो जपेत् सूर्यपर्वणि ।
तस्य सर्वार्थहानिःस्यादन्ते नरकमाप्नुयात् ॥२॥

शृणु मंत्रं वरारोहे प्रशस्तं पर्वदर्शने ।
मोक्षकाले च चार्वङ्गी प्रशस्तं यत् शृणुष्व तत् ॥३॥

प्रणवत्रयमुद्धृत्य मायाबीजं समुद्धरेत् ।
ततः प्रणवमुद्धृत्य त्रयमेतत् सुदुर्लभम् ॥४॥

एतत् सप्ताक्षरं मन्त्रं प्रजपेद्दशधा प्रिये ।
एतन्मत्रं न प्रजप्य चन्द्रसूर्यग्रहणे तु ॥५॥

यः पश्येद् ग्रहणं देवी प्रायश्चित्तं न विद्यते ।
मोक्षकाले च चार्वङ्गी देवानामपि दुर्लभम् ॥६॥

मायाबीजत्रयं लिख्य प्रणवं तदनन्तरम् ।
पुनर्मायात्रयं देवी सर्वत्रैव प्रशस्यते ॥७॥

श्रीं शंकर कहते हैं—हे प्रिये । अब मैं श्रेष्ठतर सुषुम्नान्तर्गत वाला अतिशय गोपनीय मंत्र, ( जो वहाँ अवस्थित है ) कहता हूँ, श्रवण करो !

इस मन्त्र को जाने बिना जो सूर्यपर्व में मंत्रजप करता है, उसके सर्वार्थ का नाश हो जाता है और मृत्यु के उपरान्त वह नरकगामी होता है।

हे वरारोहे ! हे चार्वङ्गी ! सूर्य तथा चन्द्रपर्व दर्शन में तथा ग्रहण-मोक्ष काल में जो मन्त्र प्रशस्त है, उसे सुनो।

ॐ ॐ ॐ ह्रीं ॐ ॐ ॐ, यह सप्ताक्षर यन्त्र दस बार जप कर ग्रहण दर्शन करे। चन्द्र एवं सूर्य ग्रहण काल में इसका जाप करना चाहिये अन्यथा पापभागी होना पड़ता है। ह्रीं ह्रीं ह्रीं ॐ ह्रीं ह्रीं ह्रीं, इस सप्ताक्षर देवदुर्लभ मन्त्र को मोक्षकालीन ग्रहण दर्शनार्थ प्रशस्त माना गया है ॥ १–७ ॥

वैष्णवेषु च सौरेषु शाक्ते शैवे वरानने।
प्रशस्तं चञ्चलापाङ्गी नान्यथा तु कदाचन ॥८॥
एतन्मन्त्रमविज्ञाय यः पश्येद् ग्रहणं शुभे।
सर्वं तस्य वृथा देवी चान्ते शूकरतां व्रजेत् ॥९॥
दर्शने मोक्षणे चैव मन्त्रद्वयमितीरितम्।
यन्नोक्तं सर्वतन्त्रेषु चेदानीं प्रकटीकृतम् ॥१०॥

हे वरानने ! हे चंचल अंगो वाली ! वैष्णव, सौर, शक्ति तथा शैव प्रभृति सबके लिए यह मन्त्रद्वय प्रशस्त है। यह कभी भी अन्यथा नहीं होता। जो इसे बिना जाने ग्रहण का दर्शन करता है, उसका समस्त जप वृथा हो जाता है और वह व्यक्ति मृत्यु के अनन्तर शूकर होता है। ग्रहण दर्शन तथा मोक्षकालदर्शनार्थ उक्त मन्त्रद्वय विहित हैं। किसी भी तन्त्र में इस विधान को नहीं कहा गया है। केवल मात्र यहाँ ही इसका प्रकाशन हुआ है ॥ ८–१० ॥

न तिथि र्न व्रतं होमो ग्रहणे चन्द्रसूर्ययोः।
ग्रासादिमोक्षपर्यन्तं जपेन्मन्त्रमनन्यधीः ॥११॥
यथा बाह्ये महेशानी तथा चैवान्तरात्मनि।
उभयोरेकतां कृत्वा प्रजपेन्मनसा शुचिः ॥१२॥

चन्द्र तथा सूर्यग्रहण की तिथि, व्रत, होम प्रभृति का विचार न करे। ग्रास के प्रारम्भ से मोक्षपर्यन्त एकाग्र होकर मन्त्रजप ही करे। हे महेशानी! इस विधान से वाह्य आकाशस्थ ग्रहण तथा सुषुम्नामध्य अन्तरात्म ग्रहण में जप करे। दोनों ग्रहणों का एकत्व करके पवित्र साधक मानसिक जप में निरत हो ॥ ११-१२ ॥

राहुर्यदा महेशानी सूर्यं चन्द्रञ्च धावति ।
वैरीभावमनुस्मृत्य विकलांगस्तु पार्वती ॥१३॥
तदोपरागो भवति सर्वं योगमयं विदुः ।
ब्रह्माद्या देवताः सर्वे गंगाद्यातीर्थकोटयः ॥१४॥
सूर्यमण्डलमासाद्य प्रजपेदिष्टमन्त्रकम् ।
तान् दृष्टवा सहसा राहुः पलायति महापदि ॥१५॥

अंगविहीन राहु जब वैर का स्मरण करके चन्द्र-सूर्य ग्रास हेतु धावित होता है, तभी सर्वयोगमय ग्रहण प्रारम्भ हो जाता है। उस समय ब्रह्मादि समस्त देवता तथा गंगादि कोटि-कोटि तीर्थ सूर्यमण्डल में प्रवेश करके अपने-अपने इष्टमन्त्र का जप करते हैं। उन्हें उपस्थित देखकर तथा इस महाविपत्ति को देखकर राहु पलायन कर देता ॥ १३-१५ ॥

अन्यथा तत्क्षणात् सर्वं ब्रह्माण्डं नाशमाप्नुयात् ।
तत्क्षणे सर्व तीर्थानि सामान्यमुदकं प्रिये ॥१६॥

अन्यथा राहु समस्त ब्रह्माण्ड का नाश करने में प्रवृत्त हो जाता। उस समय सामान्य जल भी तीर्थरूप हो जाता है ॥ १६ ॥

यान्ति स्वपदमुत्सृज्य सर्वतीर्थोदकस्ततः ।
सामान्यमुदकं यत्तु गंगातोयसमं भवेत् ॥१७॥

उस समय प्रत्येक तीर्थ सर्वतीर्थमय हो जाते हैं। सामान्य जल भी गंगाजल हो जाता है ॥ १७ ॥

तक्षणे चञ्चलापाङ्गि तज्जले स्नानमात्रतः।
चतुर्भुजसमाः सर्वे लोकाः भारतवासिनः ॥१८॥

तक्षणाद् गिरिजे सत्यं मोक्षं ब्रह्मपदं लभेत्।
भारते विविधा पूजा भारते विविधो जपः ॥१९॥

तथापि बहुकालेन सिद्ध्यते सङ्गदोषतः।
मान्धाता प्रमुखाः सर्वे रामो दाशरथिस्तथा ॥२०॥

हे चंचल अंगोवाली ! ग्रहण काल में जल से स्नान करने पर स्नान मात्र से भारत वासी जनगण चतुर्भुज के समान हो जाते हैं। तक्षण वह स्नानकारी मोक्ष लाभ तथा ब्रह्मपद प्राप्त करता है। यहाँ अनेक देवदेवी की पूजा तथा उनका बहुविध जप प्रचलित है। संग दोष के कारण सब दीर्घ काल में सिद्ध होता है। किन्तु मान्धाता आदि प्रमुख राजा तथा दाशरथी राम ने भी ॥ १८-२० ॥

प्रजप्य तारिणी दुर्गामाशु सिद्धिमवाप्नुयात्।
अस्य द्वीपेषु वर्षेषु नानातीर्थानि सन्ति च ॥२१॥

तारिणी दुर्गा का मंत्र जप करके त्वरित सिद्धि पाया था। इस जम्बूद्वीप में अनेक तीर्थ अवस्थित हैं ॥ २१ ॥

नानाभोगयुता लोकाः देववत् सर्वदा प्रिये।
ते सर्वे देवताप्राया नानाभोगविलासिनः ॥२२॥

नानासुखमयाः सर्वे दिव्यस्त्रीगणसेविताः।
तेषां गेहे महेशानी नानातीर्थानि सन्ति वै ॥२३॥

हे प्रिये ! इन स्थानों के लोकवासी देवतुल्य नाना भोगविलास से युक्त हैं। यहाँ के मानवगण भी देवताओं के समान भोग विलासासक्त रहते हैं। वे नाना सुखों के अधीश्वर हैं और दिव्य स्त्रीसमूह के द्वारा सेवित हैं। हे महेशानी ! उनमें से प्रत्येक के गृह में नानाविध तीर्थ विद्यमान हैं ॥ २२-२३ ॥

ग्रहणं चन्द्रदेवस्य सूर्यदेवस्य सुन्दरी।
बहुभाग्येन चार्वङ्गी लोका भारतवासिनः ॥२४॥

प्राप्तिमात्रेण जप्तध्यं तत्सर्वमक्षयं भवेत् ।
चतुर्दशी पौर्णमासी सोममङ्गलसंयुता ॥
यदा भवति लोकेऽस्मिन् तदा सूर्यग्रहेण किम् ।
एषा तु चंचलापाङ्गी कोटिसूर्यग्रहैः समा ॥२५-२६॥

हे सुन्दरी ! हे सुन्दर अंगोवाली ! भारत वर्ष के लोग भाग्यवशात् सूर्य एवं चन्द्रग्रहण का तत्व जानते हैं। अतः ग्रहण प्रारंभ होते ही जप प्रारंभ करे। इससे अक्षय फल मिलता है। यदि चतुर्दशी तथा पूर्णिमा तिथि सोम एवं मंगलवार को युक्त होती है, तब सूर्य ग्रहण का ही क्या प्रयोजन ! सोम एवं मंगलयुक्त चतुर्दशी तथा पूर्णिमा करोड़ों सूर्य ग्रहण के समान है॥ २४-२५॥

शुक्लाष्टम्यां नवम्यां वा चतुर्दश्यां तथैव च ।
संक्रान्त्यां पर्वदिवसे पूजालोपं न कारयेत् ॥२७॥
नावश्यं पूणयेद् यस्तु तत्वहीनो भवेत प्रिये ।
एवं तिथौ महादेवीं विष्णुम्वाशिवमेव वा ॥२८॥
यदि नो पूजयेद्देवी तत्वहीनो भवेत् प्रिये ।
तत्वहीनस्य देवेशी जपयज्ञादि निष्फलम् ॥२९॥
शांम्भवी कुप्यते तेभ्यो ब्रह्महत्या पदे-पदे ।
यद्यत् पूर्वकृतं कर्म जपहोमादिकञ्च यत् ॥३०॥
तत् सर्वं नाशमायाति मम तुल्यो भवेद् यदि ।
चन्द्रसूर्यग्रहे देवी न चन्द्रं गणयेत् प्रिये ॥३१॥
ब्राह्मणः क्षत्रियाः वैश्यास्तथा शूद्राश्च पार्वती ।
सूर्यग्रहणकालाद्धि नान्यः कालः प्रशस्यते ॥३२॥

शुक्लाष्टमी, नवमी, चतुर्दशी, संक्रान्ति तथा पर्व के दिनों में महामाया का पूजन अवश्य करे। इन सब दिवसों में पूजा से विरत न हो। हे प्रिये ! इन सब अवसरों पर पूजा से विरत रहना अनुचित है। इससे तत्वहीनता आती है। हे महादेवी ! इन सब तिथियों पर महामाया की पूजा न करने से विष्णु तथा शिव

भी तत्वहीन हो सकते हैं। तत्वहीन व्यक्ति का तथा होमादि निष्फल हो जाता है।

ऐसे व्यक्ति के प्रति महामाया क्रुद्ध हो जाती है और वह व्यक्ति पग-पग पर ब्रह्महत्या जनित पाप का भागी हो जाता है। उक्त दिवसों पर पूजा न करने पर मेरे समान ( शिव तुल्य ) व्यक्ति भी अपने पूर्वकृत जप होमादि के फल से रहित हो जाता है। हे प्रिये ! चन्द्र तथा सूर्य ग्रहण काल में तिथ्यादि विचार न करें। हे पार्वती ! ब्राह्मण, क्षत्रिय, वैश्य, शूद्रादि सभी के लिए सूर्यग्रहण की अपेक्षा प्रशस्त काल कोई भी नहीं हैं।। २७-३२ ॥

स कालः परमेशानि परं ब्रह्मस्वरूपवान् ।<br>
ग्रहणे चन्द्रसूर्यस्य न जपेद् यदि दीक्षितः ॥३३॥

पूर्वपुण्यं परित्यज्य विष्ठायां जायते कृमिः ।<br>
तस्माद् यत्नेन कर्त्तव्यं ग्रहणे जपपूजनम् ॥३४॥

न तिथिर्नाम गोत्रं वा न च संकल्पमाचरेत् ।<br>
कलिकाले तु देवेशि यवना बलवत्तराः ॥३५॥

ग्रहणकाल परब्रह्मस्वरूप है। यदि मन्त्रदीक्षित व्यक्ति चन्द्रसूर्य ग्रहणकाल में जप नहीं करता, उस स्थिति में उसका पूर्वपुण्य तो विनष्ट हो ही जाता है, साथ ही वह व्यक्ति दूसरे जन्म में विष्ठा के कृमिरूप से जन्म लेता है। अतएव सर्वप्रयत्न द्वारा ग्रहण काल में जप पूजन करते रहना चाहिए। ग्रहणकाल में जप अथवा पूजा की तिथि, नाम, गोत्र, संकल्प आदि वाक्य का उच्चारण नहीं करना चाहिए। हे देवेशी ! कलिकाल में यवन अत्यन्त बलवान हो जाते हैं॥ ३३-३५ ॥

मत्स्यमांसरताः सर्वे सर्वदा मद्यसेविनः ।<br>
अनाचाररतास्ते न सिद्धन्ति यवनाः कलौ ॥३६॥

यवनानां महेशानि त्र्यक्षरीं ब्रह्मरूपिणीम् ।<br>
निगदामि वरारोहे सावधानावधारयः ॥३७॥

वे मांस तथा मछली भोजन करते हैं और मद्यपान में आसक्त बने रहते हैं। वे अनाचार रत भी रहते हैं। अतः कलियुग में ऐसी वृत्ति वाले यवन सिद्धि प्राप्त नहीं कर सकते। हे महेशानी! हे वरारोहे! यवनों के लिये त्र्यक्षरी ब्रह्म रूपिणी मंत्र कहता हूँ। अविहितचित्त होकर श्रवण करो ॥ ३६-३७ ॥

कलावतीं समुद्धृत्य रङ्गिणीं तदनन्तरम्।
रतिबीजं ततो देवि ततस्तु रुद्रयोगिनीम् ॥३८॥

एषा तु त्र्यक्षरी विद्या यवनेषु प्रतिष्ठिता।
संयुक्तैषा यदा विद्या तथैवैकाक्षरी भवेत् ॥३९॥

कलावती ( क ), रंगिनी ( र ), रति ( ई ) एवं रुद्रयोगिनी ( ँ ) के योग से त्र्यक्षरी मंत्र यवनों के लिये है। इन तीनों के संयोग से क्रीं मन्त्र सिद्ध हो जाता है ॥ ३८-३९ ॥

साचारा ब्राह्मणाद्यास्तु सिद्धयन्ति बहुकालतः।
अनाचाराः प्रणश्यन्ति सत्यमेतन्न संशयः॥
उपाया ब्राह्मणदीनां तेनोक्ताः शतशो मया ॥४०॥
सिद्धयन्ति ते यथोक्तेन नियमैश्च यथाविधि।
इति ते कथितं देवि रहस्यं परमाद्भुतम् ॥४१॥

न कस्मैचित् प्रवक्तव्यं यदि तेऽस्ति दया मयि ॥४२॥

प्रकृत ब्राह्मण भी दीर्घकाल में सिद्धि प्राप्त करते हैं। विरुद्धाचार वाले विनष्ट हो जाते हैं। इसमें किंचित संदेह नहीं है। अतः मैंने ब्राह्मणादि के लिये भी विहित इस पद्धति को अनेक बार कहा है।

यथोक्त नियमानुसार आचारावलम्बन द्वारा मंत्रसिद्धि प्राप्त होती है। हे देवी! यह परमाश्चर्यमय रहस्य तुमसे कहा है। यदि तुम मेरे प्रति किंचित भी दयावान हो, उस स्थिति में इस विषय में किसी से भी कुछ भी प्रकाशित नहीं करना ॥ ४०-४२ ॥

इति महामायातंत्रे सप्तमः पटलः

महामायातंत्र, सप्तम पटल समाप्त

# पचमोऽध्याय

हिमालय उवाच—

योग वद महेशानि साग सवित्प्रदायकम् ।
कृतेन येन योग्योऽह भवेय तत्त्वदर्शने ॥१॥

श्री देव्युवाच—

न योगो नभस पृष्ठे न भूमौ न रसातले ।
ऐक्य जीवात्मनोराहुयोग योगविशारदा ॥२॥

तत्प्रत्यूहा षडाख्याता योगविघ्नकरानघ ।
कामक्रोधौ लोभमोहौ मदमात्सर्यसज्ञकौ ॥३॥

योगागैरेव भित्त्वा तान्योगिनो योगमाप्नुयु ।
यम नियममासनप्राणायामौ तत परम् ॥४॥

प्रत्याहार धारणाख्य ध्यान सार्ध समाधिना ।
अष्टागान्याहुरेतानि योगिना योगसाधने ॥५॥

अहिंसा सत्यमस्तेय ब्रह्मचर्य दयाऽऽर्जवम् ।
क्षमा धृतिर्मिताहार शौच चेति यमा दश ॥६॥

तप सतोष आस्तिक्य दान देवस्य पूजनम् ।
सिद्धातश्रवण चैव ह्रीर्मतिश्च जपो हुतम् ॥७॥

दशैते नियमा प्रोक्ता मया पर्वतनायक ॥
पद्मासन स्वस्तिक च भद्र वज्रासन तथा ॥८॥

वीरासनमिति प्रोक्त क्रमादासनपचकम् ॥८½॥

(इस अध्याय मे नाना प्रकार के योगो का वर्णन किया जा रहा है।)

हिमालय जी ने कहा,— हे भगवति परमेश्वरि! आप ज्ञान की उत्पत्ति कराने वाले सागोपाग योग का वर्णन करें, जिसके द्वारा मैं आप के तत्त्व दर्शन का पूर्ण अधिकारी वन सकू। इस प्रश्न को सुनकर श्री भगवती जी वोली – योग न आकाश मे है, न पृथ्वी और पाताल मे। जो जीव और आत्मा की एकता है, वही योग कहलाता है। योग के विद्वानो का भी यही कहना है। हे निष्पाप हिमालय! उस योग मे विघ्न की उत्पत्ति करने वाले ६ दोप होते हैं, अर्थात् जीव और आत्मा का सयोग रूप जो योग है, उसे नष्ट करने के लिए काम, क्रोध, लोभ, मोह, मद और ईर्ष्या ये ६ दोष हैं। योग के जानने वाले साधक को योग के अगो द्वारा इन ६ विघ्नो का नाश करके योग मे सफलता प्राप्त करनी चाहिये।

योग के यम, नियम, आसन, प्राणायाम प्रत्याहार, भावना और समाधि य आठ अग हैं। योग के साधको को इनकी साधना अवश्य करनी चाहिये। यम भी दश कहे गये है। अहिंसा, सत्य, अस्तेय, ब्रह्म-चर्य, दया, सरलता, क्षमा, धृति, परिमिताशन और पवित्रता। हे पर्वत-राज! नियम भी योग मे दश ही वतलाये गये है, जो इस प्रकार हैं —

तप, सन्तोप, आस्तिकभाव, दान, देवताओ का पूजन, सिद्धान्त का श्रवण, बुरे कामो से लज्जा, सद्बुद्धि, जप और हवन। अव क्रम पूर्वक पाच आसन योग मे जो कार्यकारी होते हैं, उनका वर्णन इस प्रकार है – (१) पद्मासन, (२) स्वस्तिकासन, (३) भद्रासन, (४) वज्रासन और (५) वीरासन। ८॥

ऊर्वोरुपरि विन्यस्य सम्यक्पादतले शुभे।६॥

अगुष्ठौ च निवध्नीयाद्धस्ताभ्या व्युत्क्रमात्तत।
पद्मासनमिति प्रोक्त योगिना हृदयङ्गमम्।१०॥

## पद्मासन का लक्षण

दोनो पैरो के दोनो तलवो को जाघो पर रखे। फिर हाथो को पीठ की ओर ले जाकर दाहिने पैर के अगूठे को पकडे। योगिजनो के हृदय मे प्रसन्नता उत्पन्न करने वाला इस प्रकार का जो आसन है, उसे पद्मासन कहते है ।१०।।

जानूर्वोरतरे सम्यक्कृत्वा पादतले शुभे ।
ऋजुकायो विशेद्योगी स्वस्तिक तत्प्रचक्षते ।११।।

## स्वस्तिकासन के लक्षण

जाघ और घुटनो के बीच मे पैर के तलवो को अच्छी तरह रखे। फिर शरीर को सीधा करके बैठ जाना स्वस्तिकासन कहलाता है ।।११।।

सीवन्या पार्श्वयोर्न्यस्य गुल्फयुग्म सुनिश्चितम् ।।
वृषणाध पादपार्ष्णी पार्ष्णिभ्याम् परिबन्धयेत् ।।१२।।

भद्रासनमिति प्रोक्त योगिभि परिपूजितम् ।।

## भद्रासन के लक्षण

योगिजन भद्रासन उस आसन को कहते हैं, जिसमे अण्डकोप की शिरा के नीचे सीवन के दोनो ओर दोनो एडियो को अच्छी तरह अड-कोषो के नीचे रखकर फिर दोनो पैरौ को हाथो से पकड कर बैठना हो, अर्थात् इस प्रकार की बैठने की स्थिति को भद्रासन कहा जाता है। योगिजन इस आसन का विशेष आदर करते हैं ।।१२½।।

ऊर्वो पादौ क्रमान्न्यस्य जान्वो प्रत्यड्मुखागुली ।।१३।।
करौ विदध्यादाख्यात वज्रासनमनुत्तमम् ।।१३½।।

## वज्रासन के लक्षण

इस असान मे दोनो पैर क्रम पूर्वक दोनो जाघो पर रखकर दोनो

घुटनो के निचले भाग मे सीधी अगुली वाले दोनो हाथ रखकर बैठने की जो स्थिति है, उसे वज्रासन कहते हैं ॥१३॥

एक पादमध कृत्वा विन्यस्योरु तथोत्तरे ॥१४॥
ऋजुकायो विशेद्योगी वीरासनमितीरितम् ॥ १५½॥

## वीरासन

जिस आसन मे योगिजन एक जाघ के नीचे एक पैर को रखकर और शरीर को सीधा करके बैठते है, उस बैठने की स्थिति का नाम वीरासन है ॥१४½॥

(प्राणायाम के ३ भेदो का वर्णन)

इडया कर्षयेद्वायु वाह्य षोडशमात्रया ॥१५॥

धारयेत्पूरित योगी चतु षष्ट्या तु मात्रया ।
सुषुम्नामध्यग सम्यग्द्वात्रिंशन्मात्रया शनै ॥६॥

नाड्या पिड्गलया चैत्र रेचयेद्योगवित्तम ।
प्राणायाममिम प्राहुर्योगशास्त्रविशारदा ।१७॥

## पूरक प्राणायाम के लक्षण

जितने समय मे सोलह वार प्रणव का उच्चारण हो सके, उतने समय मे इडा (अर्थात् बायी नासिका) के द्वारा बाहर की वायु को खीचना, यह पूरक प्राणायाम कहलाता है ।

## कुंभक प्राणायाम के लक्षण

फिर उपर्युक्त क्रम से खीची हुई वायु को चौंसठ वार प्रणव का उच्चारण करने के समय तक सुषुम्णा मे रोकना कुम्भक प्राणायाम कहलाता है ।

## रेचक प्राणायाम के लक्षण

इस प्रकार रोकी हुई वायु को बत्तीस बार प्रणव के अर्थात् "ओम्" के उच्चारण मे जितना समय लगता है, उतने समय तक धीरे-धीरे पिगला ( दक्षिण नासिका ) के द्वारा जो बाहर निकालना है, इस प्रक्रिया को रेचक प्राणायाम के नाम से पुकारते है। योगशास्त्र के ज्ञाता इस पूरक, कुम्भक और रेचक प्रक्रिया को ही प्राणायाम के नाम से पुकारते है ॥१७॥

भूयो भूय क्रमात्तस्य बाह्यमेव समाचरेत् ।
मात्रावृद्धिक्रमेणैव सम्यग्द्वादश षोडश ॥१८॥

इस प्रकार बार बार बाहर की वायु को लेकर पूरक, कुम्भक और रेचक प्राणायाम का अभ्यास करते समय क्रम पूर्वक प्रणव के उच्चारण का समय बढ़ता रहे। इस प्रकार का प्राणायाम पहले बारह बार और तदनन्तर क्रमश और भी अधिक बार वायु को खीचने, धारण करने एव निकालने का समय अनुपात से बढ़ाता जाये ।१८॥

जपध्यानादिभि सार्धं सगर्भं त विदुर्बुधा ।
तदपेत विगर्भं च प्राणायाम परे विदु ॥१९॥

क्रमादभ्यस्यत पुसो देहे स्वेदोद्गमोऽधम ॥
मध्यम कपसयुक्तो भूमित्याग परो मत ॥२०॥
उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते ॥

प्राणायाम दो प्रकार के होते है — सगर्भ और विगर्भ । जिसमे इष्ट देवता का जप एव ध्यान आदि किया जाता है, उसे ज्ञानिजन सगर्भ प्राणायाम कहते है और जिस प्राणायाम मे जप, ध्यान आदि को महत्त्व नही दिया जाता, उसे विगर्भ शब्द से पुकारते है। इस प्रकार प्राणायाम का अभ्यास विधिपूर्वक करना चाहिये । जिस प्राणायाम का अभ्यास करते समय शरीर मे पसीना आने लगे उसे अधम जिसमे कम्प

उत्पन्न हो जाये उमे मध्यम और जिसमे भूमि को त्याग कर पृथ्वी से ऊपर उठने की शक्ति उत्पन्न हो जाये, उसे उत्तम प्राणायाम कहते है।

जब तक उत्तम कोटि के प्राणायाम तक मानव न पहुच जाये, तब तक उसे अभ्यास करते रहना चाहिये।

इन्द्रियाणा विचरता विषयेषु निरर्गलम् ॥२१॥

बलादाहरण तेभ्य प्रत्याहारोऽभिधीयते ।२१½॥

## प्रत्याहार के लक्षण

इन्द्रियाँ जिस समय स्वच्छन्द रूप से अपने अपने विषयो मे विचरण करती हैं, अर्थात् अपने अपने विषयो को देखना, सुनना, सूघना आदि कार्यों को करती हैं, उस समय उन्हे बलपूर्वक विषयो से हटाने की जो प्रक्रिया है, उसे प्रत्याहार कहते है ॥२१½॥

अङ्गुष्ठगुल्फजानमूरुमूलाधारलिंगनाभिपु ।२२॥

हृद्ग्रीवाकठदेशेषु लम्बिकाया ततो नसि ॥
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशाते यथाविधि ॥२३॥

धारण प्राणमरुतो धारणेति निगद्यते ॥२३½॥

## धारणा का लक्षण

अगुष्ठ, एडी, घुटने, जाँघ, गुदा, लिंग, नाभि, हृदय, ग्रीवा, कण्ठ, भ्रूमध्य भाग (भौंहो के बीच का भाग) और मस्तक इन बारह स्थानो मे प्राणवायु को विधि पूर्वक धारण किए रखने की प्रक्रिया को धारणा कहा जाता है ॥२३½॥

समाहितेन मनसा चैतन्यातरवर्तिना ॥२४॥
आत्मन्यभीष्टदेवाना ध्यान ध्यानमिहोच्यते ॥२४½॥

## ध्यान के लक्षण

मन को चेतन आत्मा मे समाहित करके, अर्थात् लगाकर, उसमे अपने अभीष्ट देवता का ध्यान करने की प्रक्रिया को ध्यान कहा जाता है, अर्थात् इस प्रक्रिया मे मन की एकाग्रतापूर्वक अपने इष्टदेव के रूप का पूर्णतया ध्यान किया जाता है ॥२४½॥

समत्वभावना नित्य जीवात्मपरमात्मनो ॥२५॥
समाधिमाहुर्मुनय प्रोक्तमष्टागलक्षणम् ॥२५½॥

## समाधि के लक्षण

जिस समय जीवात्मा और परमात्मा मे समत्व भावना उत्पन्न हो जाती है, अर्थात् दोनो मे एकता का भाव साधक को उत्पन्न होता है, उस प्रक्रिया का नाम समाधि है । इस प्रकार ये अष्टाग योग के लक्षण हैं ॥२६½॥

इदानी कथये तेऽह मत्रयोगमनुत्तमम् ॥२६॥

विश्व शरीरमित्युक्त पचभूतात्मक नग ॥
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ॥२७॥

तिस्त्र कोट्यस्तदर्धेन शरीरे नाड्यो मता ॥
तासु मुख्या दश प्रोक्तास्ताभ्यस्तिस्त्रो व्यवस्थिता ॥२८॥

प्राधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ॥
इडा वामे स्थिता नाडी शुभ्रा तु चन्द्ररूपिणी ॥२९॥

शक्तिरूपा तु सा नाडी साक्षादमृतविग्रहा ॥
दक्षिणे या पिगलाख्या पु रूपा सूर्यविग्रहा ॥३०॥

सर्वतेजोमयी सा तु सुषुम्ना वह्निरूपिणी ॥
तस्या मध्ये विचित्राख्ये इच्छाज्ञानक्रियात्मकम् ॥३१॥

मध्ये स्वयभूलिग तु कोटिसूर्यसमप्रभम् ।
तदूर्ध्वं मायाबीज तु हरात्मा बिंदुनादकम् ॥३२॥

तदूधूर्वं तु शिखाकारा कुण्डली रक्तविग्रहा ॥
देव्यात्मिका तु सा प्रोक्ता मदभिन्ना नगाधिप ॥३३॥

तद्वाह्ये हेमरूपाभ वादिसातचतुर्दलम् ॥
द्रुतहेमसमप्रख्यम् पद्म तत्र विचिंतयेत् ॥३४॥

तवदूधूर्वं त्वनलप्रख्यम् षड्दल हीरकप्रभम् ।
वादिलातषड्वर्णेन स्वाधिष्ठानमनुत्तमम् ॥३५॥

मूलमाधारषट्कोण मूलाधार ततो विदु ।
स्वशब्देन पर लिंग स्वाधिष्ठान ततो विदु ॥३६॥

तदूधूर्वं नाभिदेशे तु मणिपूर महाप्रभम् ।
मेघाभ विद्युदाभ च बहुतेजोमय तत ॥३७॥

मणिवद्भिन्न तत्पद्म मणिपद्म तथोच्यते ।
दशभिश्च दलैर्युक्त डादिफाताक्षरान्वितम् ॥३८॥

विष्णुनाऽधिष्ठित पद्म विष्णवालोकनकारणम् ।
तदूर्ध्वेनाहत पद्ममुद्यदादित्यसन्निभम् ॥३९॥

कादिठातदलैरर्कपत्रैश्च समधिष्ठितम् ॥
तन्मध्ये वाणलिंग तु सूर्यायुतसमप्रभम् ॥४०॥

शब्दब्रह्ममय शब्दानाहत तत्र दृश्यते
अनाहताख्य तत्पद्म मुनिभि परिकीर्तितम् ॥४१॥

आनन्दसदन तत्तु पुरुषाधिष्ठित परम् ।
तदूर्ध्व तु विशुद्धाख्य दल षोडशपकजम् ॥४२॥

स्वरैं षोडशभिर्युक्त धूम्रवर्ण महाप्रभम् ।
विशुद्ध तनुते यस्माज्जीवस्य हसलोकनात् ॥४३॥

विशुद्ध पद्ममाख्यातमाकाशाख्य महाद्भुतम् ।
आज्ञाचक्र तदूर्ध्वं तु आत्मनाऽधिष्ठित परम् ॥४४॥

आज्ञासक्रमण तत्र तेनात्रेति प्रकीर्तितम् ।
द्विदल हक्षसयुक्त पद्म तत्सुमनोहरम् ।४५॥

कैलासाख्य तदूर्ध्वं तु रोधिनी तु तदूर्ध्वत ।
एव त्वाधारचक्राणि प्रोक्तानि तव सुव्रत ॥४६॥

सहस्रारयुत बिंदुस्थान तदूर्ध्वमीरितम् ।
इत्येतत्कथित सर्वं योगमार्गमनुत्तमम् ॥४७॥

आदौ पूरकयोगेनाप्याधारे योजयेन्मन ।
गुदमेढ्रातरे शक्तिस्तामाकुञ्च्य प्रबोधयेत् ॥४८॥

लिंगभेदक्रमेणैव बिंदुचक्र च प्रापयेत् ।
शभुना ता परा शक्तिमेकीभूता विचिंतयेत् ॥४९॥

तत्रोत्थितामृत यत्तु द्रुतलाक्षारसोपमम् ।
पाययित्वा तु ता शक्ति मायाख्या योगसिद्धिदाम् ॥५०॥

षट्चक्रदेवतास्तत्र सतर्प्यामृतधारया ॥
आनयेत्तेन मार्गेण मूलाधार तत सुधी ॥५१॥

एवमभ्यस्यमानस्याप्यहन्यहनि निश्चितम् ।
पूर्वोक्ता दूषिता मन्त्रा सर्वे सिद्ध्यन्ति नान्यथा ।५२॥

जरामरणदु खाद्यैर्मुच्यते भवबन्धनात् ।
ये गुणा सति देव्या मे जगन्मातुर्यथा तथा ।५३॥

ते गुणा साधकवरे भवन्त्येव न चान्यथा ।
इत्येव कथित तात वायुधारणमुत्तमम् ॥५४॥

हे हिमालय ! अब आपके समक्ष मैं श्रेष्ठ मन्त्र योग का वर्णन करती हू । इस पचभूतात्मक शरीर को विश्व कहा जाता है । चन्द्र, सूर्य और अग्नि के तेज से युक्त होने पर ईडा, पिगला, सुषुम्ना मे योग साधना के द्वारा जीव ब्रह्म की एकता होती है । इस शरीर मे साढे तीन करोड नाडिया हैं । उनमे दस मुख्य हैं— उन दस मे भी तीन नाडियो को सबसे मुख्य बतलाया गया है। ये मेरुदण्ड मे चन्द्र, सूर्य और अग्नि रूप होकर रहती हैं। बायी ओर श्वेत वर्ण की चन्द्ररूपिणी नाडी है । यह शक्ति स्वरूपा और अमृतमय शरीर से युक्त है। मेरुदण्ड के दाहिनी ओर पिंगला नाम की नाडी है। वह पुरुष रूपा सूर्य के शरीर वाली, अर्थात सूर्यमूर्ति नाडी है । इनके बीच मे सर्वतेजोमयी अग्नि रूपिणी सुषुम्ना नाम की नाडी है । सुषुम्ना नाडी के मध्य मे विचित्रा नाम की नाडी है, उसमे इच्छा और ज्ञान की क्रियाओ का स्वरूप होता है । करोडो सूर्यो के समान प्रभा से सम्पन्न "स्वयम्भू लिंग" है। इस सुषुम्ना नाडी के ऊपर "ह्री" माया बीज है और उसके ऊपर लाल वर्ण वाली शिखा के आकार की कुण्डलिनी "गोल घेरा कृति" है ।

हे हिमालयराज! यह देव्यात्मिका "कुण्डलिनी' मुझ से भिन्न नही है अर्थात् यह स्वरूप मेरा ही है। इसके बाहरी भाग मे स्वर्ण वर्ण की आभा से युक्त कमल का ध्यान करना चाहिये, जिसमे चार दल हो। उनमे व, श ष, स इन चार अक्षरो का ध्यान करना चाहिये। इसे मूला-धार चक्र कहते हैं। इसके ऊपर छ कोणो वाले कमल का ध्यान करें। यह अग्नि के सदृश दलो से युक्त और हीरे के समान चमकदार है। यह व, भ, म, य, र, ल— इन छ अक्षरो से सम्पन्न स्वाधिष्ठान चक्र है। 'स्व शब्द से 'परम लिंग' स्वरूप समझना चाहिये। इसके ऊपर नाभि प्रदेश मे अत्यन्त प्रभा से युक्त मेघ, एव बिजली के समान कान्ति से सम्पन्न मणिपूरक' नामक अत्यन्त तेजोमय चक्र है। मणि के सदृश प्रभा से सम्पन्न होने के कारण इसे मणि पद्म भी कहते है। यह दस दलो

से युक्त और ड, ढ, ण, त, थ, द, ध, न, प, फ—इन दस अक्षरो से समन्वित है। यह कमल विष्णु द्वारा अधिष्ठित होने के कारण विष्णु के दर्शन का साध नहै। इसके ऊपर उदीयमान सूर्य की प्रभा से सम्पन्न'अनाहत' चक्र है। यह क, ख, ग, घ, ड, च, छ ज झ, ञ, ट, ठ अक्षरो से युक्त हैं। इसके मध्य मे दस हजार सूर्यो के समान प्रभा वाला 'ब ण लिंग' विराज-मान है। किसी भी आघात के बिना इसमे शब्द होता रहता है। अत 'शब्द-ब्रह्ममय' इस चक्र को मुनिगण 'अनाहत' कहते हैं। यह चक्र आनद का सदन है, अर्थात् मूलस्थान है और इसमे परम पुरुष अधिष्ठित रहता है। इसके ऊपर विशुद्ध नामक सोलह दलो से युक्त कमल है। यह कमल अ, आ, इ, ई, उ, ऊ, ऋ, लृ, ए, ऐ, ओ, औ, अ, अ इन चौदह स्वरो से सम्पन्न है। इसका धुम्र वर्ण है जोकि अत्यन्त प्रभा से युक्त है। इसमे हस स्वरूप परमात्मा के दर्शन से जीव विशुद्ध आत्मस्वरूप को प्राप्त कर लेता है, इसीलिए इस महान् अद्भु त कमल को विशुद्ध पद्म चक्र एव आकाश चक्र भी कहते हैं। इसके ऊपर परमात्मा का अधिष्ठान स्वरूप आज्ञा चक्र है, जिसमे परमात्मा की आज्ञा का सक्रमण होता है, इसी कारण इसको आज्ञा चक्र कहा जात है। इसके दो दल हैं, और यह ह और क्ष दो अक्षरो से युक्त एव अत्यन्त मनोहर है। इसके ऊपर कैलाश नामक चक्र है। उसके ऊपर रोहिणी नामक चक्र है।

हे सुव्रत हिमालय! आपको इस प्रकार आधार चक्रो का वर्णन सुना दिया है। इनके ऊपर एक 'सहस्त्र चक्र' है, यह बिन्दुमूल परमात्मा का स्थान है। इस कारण इसको शून्य शब्द से भी पुकारा जाता है। इसमे सहस्त्र दल है। इस प्रकार यह सर्वश्रेष्ठ योग मार्ग बतला दिया गया है। अब उसकी विधि सुनिये। पहले पूरक प्राणायाम के द्वारा आधार, अर्थात् अपने इष्ट मे मन लगाये। तदनन्तर गुदा और मेढ़ के बीच मे वायु के द्वारा कुण्डलिनी शक्ति को समेट कर उसे जागृत करे। फिर लिंग भेदन क्रम के अनुसार स्वयभू लिंग' से आरम्भ करके चक्रो द्वारा उस कुण्डलिनी शक्ति को शून्य चक्र, अर्थात् सहस्रारचक्र तक ले जायें। इसके बाद उस पराशक्ति का सहस्रार मे स्थित परमेश्वर शिव के साथ ऐक्य भाव से ध्यान करें। फिर वहा शिव और शक्ति सम्मेलन से पिघने हुए लाक्षा रस के सदृश बढने वाले अमृत को लेकर योगसिद्धि प्रदान करने वाली मायाशक्ति के अमृत का पान करना चाहिये। फिर उस अमृतधारा के

द्वारा षट् (छ) चक्रो मे स्थित देवताओ को परितृप्त करे। फिर उपर्युक्त मार्ग से ही साधक उस कुण्डलिनी शक्ति को मूलाधार चक्र तक वापिस ले आये। इस प्रकार जो साधक प्रतिदिन अभ्यास करते है, उनके लिए सब प्रकार के मत्र सिद्ध हो जाते हैं चाहे वे शिव भगवान् द्वारा दूषित या कीलित भी क्यो न किए गये हो। इसमे कोई भी शका नही करनी चाहिये। इस विधि को अपनाने से साधक बुढापा, मृत्यु आदि के दुखो से निर्मुक्त होकर भव-बन्धन से छुटकारा पा लेता है और मुझ जगज्-जननी मे जो दयालुता आदि सद्गुण हैं, वे सब गुण उस श्रेष्ठ साधक मे उत्पन्न हो जाते हैं, इसमे कुछ भी सन्देह नही। हे तात! अर्थात् हिमालय! पुत्रवात्सल्यता के कारण मैंने इस प्रकार वायु के धारण करने का श्रेष्ठ योग आपको बतला दिया है ॥५४॥

इदानी धारणाख्य तु शृणुष्वावहितो मम।
दिक्कालाद्यनवच्छिन्नदेव्या चेतो निधाय च ॥५५॥

तन्मयो भवति क्षिप्र जीवब्रह्मैक्ययोजनात्।
अथवा समल चेतो यदि क्षिप्र न सिद्धयति ॥५६॥

तदाऽवयवयोगेन योगी योगान्समभ्यसेत्।
मदीयहस्तपादादावगे तु मधुरे नग ॥५७॥

चित्त सस्थापयेन्मन्त्री स्थान स्थानजयात्पुन।
विशुद्धचित्त सर्वस्मिन्रूपे सस्थापयेन्मन ॥५८॥

यावन्मनो लय याति देव्या सविदि पर्वत।
तावदिष्टममु मन्त्री जपहोमै समभ्यसेत् ॥५९॥

मन्त्राभ्यासेन योगेन ज्ञेयज्ञानाय कल्पते।
न योगेन विना मन्त्रो न मन्त्रेण विना हि स ॥६०॥

द्वयोरभ्यासयोगो हि ब्रह्मससिद्धिकारणम्।
तम परिवृते गेहे घटो दीपेन दृश्यते ॥६१॥

एव मायावृतो ह्यात्मा मनुना गोचरीकृत ।
इति योगविधि कृत्स्न साग प्रोक्तो मयाऽधुना ॥
गुरूपदेशनो ज्ञेयो नान्यथा शास्त्रकोटिभि ।६२॥

हे हिमालय! अब आपको मैं चित्त धारण नामक योग सुनाती हू, इसे सावधानी से सुनिये । दिशा, काल और देश आदि द्वारा अपरिच्छिन्न मेरे देवी स्वरूप मे चित्त स्थित करके तन्मय हो जाने पर मानव को बहुत शीघ्र ही जीव ब्रह्म के एकत्व का ज्ञान प्राप्त हो जाता है। यदि किसी कारणवश चित्त मे मलदोष उत्पन्न होने के कारण शीघ्र सिद्धि प्राप्त न हो तो ऐसी परिस्थिति मे साधक को अवश्य योग का अभ्यास करना चाहिये। हे पर्वतराज! मेरे हस्त, चरण आदि मधुर एव मनोहर अगो मे चित्त को स्थिर करके एक एक अग पर पूर्ण रूप से मन्त्रजाप द्वारा अभ्यास करे और फिर विशुद्ध चित्त से मेरे समग्र रूप को मन मे स्थित करके उस रूप का ध्यान करे। हे हिमालय! जब तक मेरे स्वरूप मे मन का लय, अर्थात् मन की लीनता न हो जाये, तब तक इष्ट मन्त्र का जप और हवन आदि प्राणि वर्ग को करते रहना चाहिये। मन्त्राभ्यास और योग के द्वारा ज्ञेय तत्त्व का ज्ञान हो जाता है। योग के विना मन्त्र की सिद्धि नहीं होती और मन्त्र के बिना योग सिद्ध नही होता। मन्त्र और योग दोनो का समन्वयात्मक अभ्यास ही ब्रह्म ज्ञान मे सहायक होता है। जैसे- जिसके घर मे अधेरा छाया हुआ हो, उसे घट दिखाई नही देता परन्तु जब वह दीपक जला लेता है तव उसे वह दिखाई देने लगता है। इसी प्रकार माया से आवृत जीवात्मा भी मन्त्र रूपी दीपक के द्वारा दृष्टिगोचर होने लगती है। हे पर्वतराज! इस प्रकार मैंने स्वय समस्त अगो सहित यह योग की विधि आपको वतला दी है। इसका आप अनुसरण करे। यह विद्या इतनी कठिन है कि अनुभवी गुरु के उपदेश से ही जानी जा सकती है। करोडो शास्त्रो के अध्ययन मात्र से इस विद्या का ज्ञान मानव को नही हो सकता, अर्थात् योग सिद्ध गुरु की अध्यक्षता मे रह कर मन्त्र एव योग आदि के अभ्यास को करते रहना चाहिये। ऐसा करने से अवश्य सिद्धि प्राप्त हो जाती है।६२॥

**इति श्रीदेवी-भागवत-महापुराणस्य सप्तमस्कन्धान्तर्गत**
**देवीगीताशास्त्रे पचमोऽध्याय**

॥ षडाधारदलम् ॥

आधारन्तु चतुर्दलं रुणरसन् वासान्तवर्णाश्रियं
स्वाधिष्ठानमनेकवैद्युतनिभं बालान्न षट्वत्रिकम् ।
रक्ताभं मणिपूरकं दशदलं माद्यं विकाराब्धकं
पत्रैः द्वादशभिः स्वनाहतदहे मम रिमान्नाव्रतम् ॥

मात्राभिद्विदिशाषोडशस्वरयुतं ज्योतिर्विशुद्धाम्बुजं
हलैत्यक्षरबीजयुग्मसयुतं रक्ताभमाज्ञाम्बुजम् ।
तस्मादूर्ध्वगतं प्रभदिसितं पद्मं सहस्रश्छदं
नित्यानन्दमयं सदाशिवपदं नित्यान्नमस्योदरम् ॥ ६२ ॥

मूलाधारस्वाधिष्ठान मणिपूरकहनाहत विशुद्धाख्यै-

पृ। ९७)

आज्ञायमिध ई मूलाधार विघ्नेश ध्यानम् ॥

गजवक्त्रञ्च रक्ताभं त्रिणेत्रञ्च महोदरम् ।
दन्तपाशाङ्कुशापूपं चारुबाहु चतुष्टयम् ॥

महादेव सुतं मूलं मन्त्रमूर्तिमहं भजे ॥ ६३ ॥

॥ स्वाधिष्ठानं ब्रह्माम् ॥

हेमाकारं चतुर्वक्त्रं शुभ्रवस्त्रोपवीतिनम् ।
सृगक्षमालाकलशं दण्डचारुचतुर्भुजम् ॥ ६४ ॥

नेत्राष्टक समायुक्तं नित्यं वन्दे पितामहम् ।

॥ मणिपूरकं विष्णु ॥

लक्ष्मीकान्तञ्च नीलाभं शङ्खञ्च मृगगदाधरम् ।
श्रीवत्सलाञ्छनं देवं पीताम्बर विराजितम् ॥

वनमालाकिरीटञ्च कुण्डले दधतस्सदा ।
अभयं सर्वदेवानां अम्बुजाक्षमनामयम् ॥ ६५ ॥

अनेकादित्य संकाशं वन्दे विष्णुमनिन्दितम् ।

॥ अनाहते रुद्रर् ॥

क्षीराभं कालकण्ठञ्च त्रित्रें चन्द्रशेरम् ।
गङ्गाधरञ्चतुर्बाहुं त्रिशूलाग्नि वरदाभयम् ॥

ज्ञानमुद्रधरन्देवं गङ्गेन्द्रकृत किङ्किणाम्।

पृ। ९८)

पुण्डरीकाञ्जनधरं भूतिशोभित विग्रहम्।
प्रलयोदरकर्तारं वन्देरुद्रं पिनाकिनम्॥ ६६॥

॥ विशुद्धाख्ये महेश्वरर्॥

टङ्कुकुन्देन्दुशोभाढ्यं शार्दूलाजिनवासिनम्।
इन्दुगङ्गा जटाचूटं महेशाख्यं महेद्युतिम्॥

अर्केन्दु वह्निनयनं कालकण्ठमनामयम्।
चण्डांशुकोटिसदृशं सर्पयज्ञोपवीतिनम्॥

वरदाभयपाशाढ्यं वामदक्षिणबाहुकम्।
परशुं डमरुञ्चापि दधानञ्चात्मरूपिणम्॥ ६७॥

वामे महेश्वरी युक्तं वन्दे देवमहेश्वरम्।

॥ आज्ञेय सदाशिवम्॥

शुद्धस्फटिकसंकाशं द्वात्रिंशल्लक्षणान्वितम्।

वृत्तपद्मासिनं पञ्च * * वक्त्रं मनोहरम् ॥

त्रिपञ्चनयनञ्चास्यं सोमचूडशुभावहम् ।
दशबाहसमायुक्तं चित्रकायजिनाम्बरम् ॥

वरदाभयसंयुक्तं वामदक्षिणहस्तकम् ।
शूलवज्रातथा खड्गं परशुं पाशमेव च ॥

नागं वह्निञ्च दधतं शान्तरूपिणम् ।

प् । ९९)

पञ्चावरणसंयुक्तं पञ्चकृत्य परायणम् ।
पञ्चाक्षरजपं देवं पञ्चमन्त्र महातनुम् ॥

अष्टत्रिंशत्कलोपेतं आदि मध्यान्तवर्जितम् ।
विद्यानामार्थि भक्तेशं बिन्दुनादसमन्वितम् ॥

सर्वालङ्कारसंयुक्तं षट्त्रिंशतत्त्वनायकम् ।
मनोन्मति समायुक्तं वन्दे देवं सदाशिवम् ॥ ६८ ॥

॥ सच्चिदानन्तम् ॥

षडाधारापरे मूर्ध्नी सहस्रदलपङ्कजे।
गुरुनाथं कृपामूर्तिं जपाकुसुमसन्निभम्॥

द्विनेत्रं द्विभुजं शान्तं रक्तवस्त्रानुलेपनम्।
रक्तोत्पलधरं नित्यं माणिक्यमकुटोज्ज्वलम्॥

तत्त्वाधिकपरं शक्तिं साक्षामूर्तिं प्रदायकम्।
सन्मार्गदेशिकं वन्दे सच्चिदानन्दविग्रहम्॥ ६९॥

॥ नन्दिध्यानम्॥

त्रिणेत्रश्चतुर्भुजश्चैवाभयं वरदान्वितम्।
उग्रतोमरशूलञ्चाक्षमाला समन्वितम्॥ ७०॥

रक्तवस्त्रसमायुक्तं नन्दिनं संप्रपूजयेत्।

॥ नन्दिकेश्वरध्यानम्॥

प्। १००)

रक्तं त्रिणेत्रं जटिलं सव्यवामकरद्वयम्।
अक्षमालात्रिशूलञ्च दधानं नन्दिकेश्वरम्॥ ७१॥

लेता है। गुरु में, महापुरुषों में, सिद्धों में गुणदोष कदापि नहीं देखने चाहिये।

सिद्धों का आचरण बहुत विचित्र होता है, जिसे साधारण मानव नहीं समझ पाते। महापुरुषों की संगति में रहकर उनपर दोषारोपण नहीं करना चाहिये। हमारे गुरुदेव गाली भी दे देते, मार भी दे देते। उसमें कुछ कारण था। ऐसे महापुरुष दिव्य प्रतिभाशाली होते हैं। इन सिद्ध पुरुषों का ऐसा आचरण रहता है कि वे मूढ़ों से सीखते हैं और पंडितों को पढ़ाते हैं। वे शूरों से लड़ते हैं और गीदड़ को देख भागते हैं। कुछ नहीं मिले तो माँगते हैं और मिले तो त्यागते हैं। ऐसे शाहंशाह महात्मा से हर कोई माँगते हैं। उनके पास कुछ भी न होने पर भी माँगनेवाले को सब कुछ दे देते हैं। जगत की महामूल्यवान चीज़ें भी उनके लिये मूल्यहीन हैं। सिद्धपुरुष साधारण जीवन से अति दूर होते हैं।

## माँ चिति कुण्डलिनी

गुरु-परम्परा एक महान परम्परा है। गुरुजनों के बारे में कहा गया है कि तब से अबतक के सारे महापुरुषों के तप, तेज, बल पर्वत की नाईं चिरकाल से हमारा रक्षण करते रहे हैं। ऐसे गुरु शिष्य में शक्ति का पात करके, चक्रों का वेध करके, उसको ऊर्ध्व सहस्रार में स्थिर करनेवाले होते हैं।

श्रीगुरु परम चितिशक्ति को शिष्य में पात करते हैं। 'प्रत्यभिज्ञाहृदय' में इसकी व्याख्या है – **चितिः स्वतन्त्रा विश्वसिद्धिहेतुः**। याने चिति वह है जो अपनी स्वतंत्रता से जगत को रचती है। यह चितिशक्ति परम शिव से भिन्न नहीं होती। इस जगत के उत्पत्ति-स्थिति-संहाररूप कार्य की वह परम आश्रय है।

यह चितिशक्ति स्वतन्त्रता से रहनेवाली, सर्व व्यवहारकारिणी, सर्व साधनों की फलदायिनी, भुक्ति-मुक्ति-प्रदायिनी, सुखोपायकारिणी, स्वयं प्रकाशरूपा, सर्व शक्तियों की आश्रयरूपा, देश-काल-आकार से भिन्न, परशिव की कार्यकारिणी, अनुग्रह-निग्रहरूपा, परतत्त्वप्रकाशिनी है। यह चिति प्रवृत्ति-निवृत्ति उभयरूप है। इस परशिव-शक्ति की महिमा अद्भुत है। यह ज्ञानी का ज्ञान है, कर्मी का कर्मफल है, भक्तों की यह चिति ही प्रेम वा उन्मत्त दशा है। योगियों की योग-कुण्डलिनी क्रियाशक्ति है। सभी

संसार चिति से सजा है। महान आश्चर्यकारिणी, परम आश्चर्य से ग्रहण होनेवाली, परशिव की परमशक्ति चिति है। विश्व का सारा कार्य, प्रवृत्ति से लेकर निवृत्ति तक, इसी चिति से सिद्ध है।

हे माँ चिति! आप परमशिव की स्फुरणा हैं, प्रिय पत्नी और गति हैं। आप विश्व की कारणरूपा पंचतत्त्वात्मिका हैं। आप ही सूर्य, चन्द्र, तारे और नक्षत्र हैं। हे कुण्डलेश्वरी! आप स्वर्ग, वैकुण्ठ, पाताल और नरक हैं। आप ही भूर्भुवः स्वर् हैं। आप चारों दिशाएँ हैं। आप ही अपने दिव्य भाव से स्वेदज, उद्भिज, अण्डज, और जरायुज इन चौरासी लक्ष जीव योनियों को धारती हैं। अपने में ही इन अनन्त भावों को प्रकट करती हैं। आप के अनगिनती प्रकार हैं। क्या जाने इस विश्व का विमर्श करते करते लोग थक जाते हैं। आप के दिव्य प्रकाश के विकास-विकार अनन्त हैं। भेदाभेदरूप अनन्त सृष्टि को आप में ही रचकर आप परम निर्लिप्त हैं। आप केवल परमानन्दरूप से उल्लसित रहती हैं। आप वेद, वेदान्त, शास्त्र, मन्त्र इत्यादि साधन से साध्य हैं।

हे माँ कुण्डलिनी! आप नित्यानन्द से प्राप्त आनन्द शक्ति हैं। आप योग हैं। योगाङ्ग हैं। समाधि का अर्थ हैं। आप का नाम निर्विकल्पा है। आप इस मानव देह की परम आश्रया हैं। हे चितिमयी माता कुण्डलिनी! आप ही परमगुरुओं की शुद्धात्मा गुरु हैं। त्रिकुटी में, द्विदल चक्र में, श्रीगुरुपीठ में आप ही गुरुरूप से विराजमान होकर शिष्यजनों का योगक्षेम चलाती हैं। साधकों की परम दैवत, हे योगिनी कुण्डलिनी! हे गुरु! हे प्रेमास्पद! हे क्रियाशालिनी! आप ही नित्यानन्द से प्राप्त कृपा हैं। नित्यानन्द से वरदान में मिले दो अक्षर 'सोऽहम्' आप ही हैं। आप से मैं हूँ। माँ! आप से मेरी दीक्षा दीक्षित है। आप ही परमनीलमणि के सहारे मेरे आकारों को धारकर भक्तजनों को नाना दृष्टान्त द्वारा श्रद्धामय बनाती हैं।

हे प्रिय योगशक्ति! मेरा श्रीगुरुप्रेम आपको अर्पित है। आप ही उत्कृष्ट फलप्रदायिनी हैं। आप अनन्त सामर्थ्य को अपने में धारण किये हुए हैं। अनन्त रूपाकार होते हुए आप ही राम की सीता, कृष्ण की राधा, नारायण की लक्ष्मी, शिव की भवानी, योगियों की योगशक्ति, साधकों की क्रियाशक्ति और गुरुजनों की शक्तिपातरूपा अनुग्राहिका शक्ति हैं। आप ही गुरु हैं। आप ही शक्तिपात करनेवालों की शक्ति हैं।

